भासजनकस्तु मायालेशो जीवन्मुक्तस्यानिवृत्तः समाध्यवस्थायां तिरोहितोऽन्यदा दे
भासजगदाभासहेतुतयानुवर्तते । प्रारब्धकर्मफलोपभोगावसाने तु निवर्तते । श्रुतिर
'इन्द्रो मायाभिः पुरुरूपईयत'इत्याद्या मायां विविधाकारां दर्शयति । नच लेशस्यापि वि
धितत्त्वज्ञानोदयान्निवृत्तिः किं नस्यादिति वाच्यम् । प्रबलैः प्रारब्धकर्मभिर्ज्ञानस्य प्रति
द्धत्वात् । तथाहि—विद्यार्थानि कर्माणि कर्मान्तरारब्धशरीरे फलं जनयन्ति । अन्य
ज्ञानार्थानामपि कर्मणां भोगार्थत्वप्रसङ्गात् । तथाच शरीरारम्भककर्माण्युपजीव्य ज्ञा
र्थानि कर्माणि तदविरोधेन स्वफलं प्रयच्छन्तीति युक्तम् । तथाच तैः प्रतिबद्धशक्ति
तत्त्वज्ञानमविद्यालेशं न निवर्तयति ।

नच कर्मणामप्यविद्याकार्यतया तन्निवृत्तौ निवृत्तिः, तज्जनकाविद्यालेशस्यानिवृत्तेः
नन्वेवं सतीतरेतराश्रयत्वं तत्त्वज्ञानशक्तिप्रतिबन्धककर्मणामवस्थानादविद्यालेशानुवृत्तिः त
नुवृत्तौ च कर्मणामनुवृत्तिरिति, मैवम् । 'भूयश्चान्ते विश्वमायानिवृत्ति'रित्यत्र भूयोनि
त्तिरिति विशेषणादुभयविधमायाकारनिवृत्तेराकारान्तरानुवृत्तेश्च मानान्तरेणाधिगमा
प्रतीतावितरेतराश्रयत्वाभावात् । 'अन्ते विश्वमायानिवृत्ति' रिति च श्रवणात् । प्रारब्ध
लकर्मलक्षणस्य विद्याशक्तिप्रतिबन्धकस्य फलोपभोगेन निवृत्तौ प्रतिबन्धाभावे तत्त्व
नान्निःशेषाविद्यानिवृत्तिरिति प्रतीतेश्च ।

---

पारमार्थिकत्वार्थक्रियासामर्थ्यरहिततया ज्ञातस्यापि प्रपञ्चस्य शुक्तिरजतादिवत्तत्समर्थकस्तृतीय आकार इत्यर्थ
एवैषां च क्रमेण निवर्तकज्ञानशरीराणि दर्शयति—**तत्रेत्यादिना** । **तत्त्वसाक्षात्कारेणेति** । अद्वैता
वस्तुसाक्षात्कारेणेत्यर्थः । ननु यदि साक्षात्कारे जातेपि जीवन्मुक्तस्य समाध्यवस्थायां तिरोहितोऽन्य
चोद्बुद्धो वर्तेत कश्चिदाकारः केन तर्हि तस्य निवृत्तिस्तत्राह—**प्रारब्धेति** । उक्तार्थे श्रुतिमपि प्रमाणयति-
**श्रुतिरपीति** । इन्द्रः परमेश्वरः । इदि परमैश्वर्ये इति भैमसेनिस्मृतेः । आदिशब्देन 'भूयश्चान्ते विश्वमा
निवृत्ति'रित्याद्या गृह्यन्ते । 'माया तु प्रकृति'मित्यादावेकत्वेन प्रतिपादितमायाया मायाभिरित्यादिबहुत्
भिधानमाकारभेद एव घटत इतिभावः । उत्तरार्धं व्याचष्टे—**नच लेशस्यापीत्यादिना** । इदानीं प्रा
रब्धकर्मणा ज्ञानापेक्षया प्राबल्यमुपजीव्यतयोपपादयति—**तथाहीत्यादिना** । नन्वन्यैरेव कतिभिश्चित्क
भिर्ज्ञानार्थमेव देहमुत्पाद्य तत्त्वज्ञानमुत्पाद्यता किमिति कर्मान्तरारब्धशरीरोपजीवनं ज्ञानोत्पादकाना, तथा
ज्ञानोत्पत्तौ देहनिवृत्तेर्न [illegible] किरिति, तत्राह—**अन्यथेति** । भवतु कर्मान्तरारब्धशरीरे फलजनकत्वमे
ततः किमिति, तत्राह—**तथाचेति** । ननु भवतु ज्ञानोत्पादककर्मणां प्रारब्धकर्मापेक्षया दौर्बल्यं, ज्ञानस्य
किमायातं येनोत्पन्नं ज्ञान तानि न निवर्तयतीति, तत्राह—**तथाच तैरिति** । उत्पद्यमानमेव तावत्
प्रतिबद्धशक्तिकं कारणवशादुत्पद्यतामिति भावः ।

यत्तु प्रारब्धकर्मणां निरुपादानतया स्थितिरेव नोत्पद्यते कुत. प्रतिबन्धकत्वमित्युक्तं तत् परिहरति–
**नच कर्मणामिति** । निरुपादानत्वमसिद्धमित्यर्थः । ज्ञप्तावितरेतराश्रयं शङ्कते—**नन्वेवमिति** । ना
प्रारब्धकर्मभिरेवाविद्यालेशावगति श्रुतिवशादपि शक्याधिगमत्वादिति परिहरति—**मैवं भूयश्चेति**
'तस्याभिध्यानाद्योजनात्तत्त्वभावाद् भूयश्चान्ते विश्वमायानिवृत्ति'रिति श्वेताश्वतराणां मन्त्रोपनिषदि श्रूयते । अ
च भूयोनिवृत्तिर्विश्वमायानिवृत्तिरिति प्रतीयते, तत्र विश्वग्रहणेनानेकमायाकारप्रतीतिस्तेषां च क्रमेण निवृत्ति
र्भूयोनिवृत्तिरिति पौनःपुन्यापरपर्यायक्रियासमभिहाराभिधायिना भूय शब्देनावगम्यते । अन्ते निवृत्तिरित्य
नेन विदेहकैवल्यावस्थायां विलीयमान कश्चिदाकारः प्रतीयते । **अन्ते विश्वमायानिवृत्तिरिति** १
पूर्वमशेषमायाऽनिवृत्तिरिति च प्रतीयते ।

---

१ उपजीव्यत्वादिति शेष. ।

अतएव 'क्षीयन्ते चास्ये'ति सामान्यश्रुतेः प्रारब्धकर्मव्यतिरिक्तकर्मनिवृत्तिपरत्वोपपत्तिः, 'तस्य तावदेव चिर'मिति विदुषः प्रारब्धकर्मतत्कार्ययोरवस्थानाधिगमाच्च, 'तद्धास्य विजज्ञा'विति विस्पष्टज्ञानोपजननस्याश्चर्यवत्प्रतिपादनात् परोक्षज्ञानविषयत्वानुपपत्तेः, अन्यथा तद्वाक्यस्य परोक्षज्ञानस्यावश्यंभावितया तत्प्रतिपादनवैयर्थ्यात् । नच 'ज्ञानिनस्तत्त्वदर्शिन' इति स्मृतिः परोक्षनिश्चयवतस्तदभ्यसनशीलस्य प्रतिपादिका, दर्शनशब्देन साक्षात्कारस्यैव रूपादिदर्शनस्येवाभिधानात् । स्वात्मनि चापरोक्षे परोक्षज्ञानस्य विभ्रमत्वात् । नच सुखादिविषयपरकीयानुमानादिज्ञाने व्यभिचारः । स्वापरोक्षस्य स्वपरोक्षज्ञानविषयत्वे विभ्रमत्वाङ्गीकारात् ।

नचाकारिनिवृत्तौ तदाकारावस्थानासंभवः, सामान्यविशेषघटितस्यापि वस्तुनो विशेषनिवृत्तौ सामान्याकारावस्थानस्य परीक्षकैरभ्युपगमात् । नच साधक एवावस्थाविशेषं प्राप्तः स्थितप्रज्ञो गुणातीतश्च, 'प्रजहाति यदा कामा'नित्याद्यभिहितविशेषणानां तत्रानुपपत्तेः । नहि सर्वकामानां विमोकः परमात्मसाक्षात्कारमन्तरेणोपपन्नः । 'रसवर्जं

तदेवं प्रारब्धकर्मणां प्रमाणमार्गेण विदेहनिर्वाणावस्थानाधिगमात्[2] 'क्षीयन्त'इति सामान्यश्रुतिः संकोचमर्हतीत्याह—**अतएवेति** । ननु 'तस्य तावदेवे'ति श्रुतिः परोक्षज्ञानिविषयतया प्रत्याख्यातेति, तत्राह—**तद्धास्येति** । तेन[1] ह्याश्चर्यं योऽयत इत्यर्थः । ननु परोक्षज्ञानोत्पत्तावेवाश्चर्यमस्तु श्रुतेः, भवति हि मूर्खेष्वनुत्पद्यमानं परोक्षज्ञानमपि बुद्धिमत्सूत्पद्यमानमाश्चर्यहेतुरिति, तत्राह—**अन्यथेति** । अधीतवेदो विदितपदतदर्थसंगतिकः श्रवणेऽधिक्रियते, नच तस्य परोक्षज्ञानसाधनोत्पत्तिराश्चर्यहेतुः प्रत्युतानुत्पत्तौ गर्हैव स्यादिति भावः । स्मृतेरन्यथासिद्धिं परिहरति—**नच ज्ञानिन इति** । किंचापरोक्षे परोक्षज्ञानं विभ्रान्तमेव । नच परस्य परात्मानुमाने व्यभिचारः । स्वापरोक्षे स्वपरोक्षविज्ञानस्य विभ्रमत्वाव्यभिचारादित्याह—**स्वात्मनिचेति** । यत्त्वकार्यविद्यानिवृत्तावाकारावस्थितिर्न संभवतीत्युक्तं तत्परिहरति—**नचाकारीति** । अनुवृत्तव्यावृत्तात्मकं हि समस्तं वस्तु भाट्टैरभिप्रेयते । यथाहुः—'कार्यरूपेण नानात्वमभेदः कारणात्मना । हेमात्मना यथाऽभेदः कुण्डलाद्यात्मना भिदे'ति । तत्र यथा कटककेयूराद्याकारनाशेनाकारिनिवृत्तावप्याकारान्तरस्यानुवृत्तस्यानिवृत्तिस्तथेत्यर्थः ।

यदिचात्र तार्किको विप्रतिपद्येत तं प्रति सामान्यविशेषयोरत्यन्तभेदस्य समवायस्य च चिरातीतखण्डनप्रकारेण संमतिरानेतव्या । नचाकारादतिरिक्ताकार्यपि निरूपणसहिष्णुः यन्निवृत्त्यास्यापि निवृत्तिरापाद्येत । ननु तथाप्यविद्यायाः कोयमाकारः किमवयवः किं वा तद्धर्मः । नोभयथापि । किं तर्हि अविद्यैवावस्थान्तरमापन्ना । विचित्रशक्तिर्ह्यविद्याऽतः प्रारब्धभोगकर्मतत्कारणमात्ररूपेण तिष्ठतीत्यभ्युपेयम् । किंच स्थितप्रज्ञत्वेन गुणातीतत्वेन च जीवन्मुक्तमेव भगवद्गीता प्रतिपादयति, न साधकं शमादिसम्पन्नमपि, तस्यात्मसाक्षात्काराभावेन तत्प्रयुक्तसकलकामप्रहाणाभावादित्याह—**नचेत्यादिना** । साधकः फलायोपात्तशमादिसाधनः । अवस्थाविशेषम् उपसर्जनीभूतमनोनाशवासनाक्षयाभ्यासशालित्वरूपम् । अन्तःकरणधर्माणां कामानां निवृत्तिं प्रति विविक्तात्मसाक्षात्कार एव हेतुरित्येतदपि तत्रैव दर्शितमित्याह—**रसेति** । रसः कामः, दृष्ट्वा साक्षात्कृत्य ।

१ पुरुषस्येति शेषः । २ विदेहनिर्वाणात्प्रागवस्थानाधिगमादिति पाठो भाति ।

रसोऽप्यस्य परं दृष्ट्वा निवर्तते' इति स्मरणात्, 'यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः। अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुत' इतिश्रुतेश्च। तदेवं श्रुतिस्मृतिपुराणादिष्वाघुष्यमाणा जीवन्मुक्तिः प्रद्वेषमात्रेण नापलपितुं शक्यत इति सिद्धम्॥ इति श्रीगौडेश्वराचार्यपरमहंसपरिव्राजकाचार्यज्ञानोत्तमपूज्यपादशिष्यश्रीमत्परमहंसपरिव्राजकाचार्यश्रीचित्सुखमुनिविरचितायां तत्त्वप्रदीपिकायां चतुर्थः परिच्छेदः॥ ४॥

---

एतदेव श्रुतिरारण्यकी प्रकाशयतीत्याह—यदेति। फलितमाह—तदेवमिति। इति श्रीमत्परमहंसपरिव्राजकाचार्यप्रत्यक्प्रकाशपूज्यपादशिष्यस्य प्रत्यक्स्वरूपभगवतः कृतौ तत्त्वप्रदीपिकाटीकायां नयनप्रसादिन्यां चतुर्थः परिच्छेदः॥ ४॥

श्रीकाशीनाथतनुज, रघुनाथेन धीमता।
छातांग्रामनिवासेन, टिप्पणीयं कृता बुधाः॥

